॥ द्रमिडोपनिषत्सारः ॥
श्रीः ।
श्री वेदान्ताचार्यैः अनुगृहीतः
द्रमिडोपनिषत्सारः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

सेवायोग्योऽतिभोग्यः शुभसुभगतनुः सर्वभोग्यातिशायी
श्रेयस्तद्धेतुदाता प्रपदनसुलभोऽनिष्टविध्वंसशीलः ।
भक्तच्छन्दानवर्ती निरुपधिकसुहृत् सत्पदव्यां सहायः
श्रीमान् सर्वोचितायामुपनिषदि मिषत्येष गाथाशतैर्नः ॥ १॥

आद्ये पश्यन्नुपायं प्रभुमिह परमप्राप्यभूतं द्वितीये
कल्याणोदारमूर्तेर्द्वितयमिदमिति प्रेक्षमाणस्तृतीये ।
ऐश्वर्यादेश्चतुर्ये विषमधुतुलयाऽनन्यभोग्यत्वमिच्छन्
षड्भिः स्वां पञ्चमाद्यैरनितरगतिततामाचचक्षे मुनीन्द्रः ॥ २॥

परं निर्वैषम्यं सुलभमपराधप्रसहनं
सुशीलं स्वाराधं सरसभजनं स्वार्जवगुणम् ।
सुसात्म्यस्वानन्दप्रदमनघविश्राणनपरं
मुकुन्दं निध्यायन् मुनिरधिजगावाद्यशतके ॥ ३॥

द्विकाभ्यां द्व्यष्टाङ्घ्रिर्दुरधिगमनीतिस्थपुटिता
यदन्त्या मीमांसा श्रुतिशिखरतत्त्वं व्यवृणुत ।
तदादौ गाथाभिर्मुनिरधिकविंशाभिभिरिह नः
कृती सारग्राहं व्यतरदिह संगृह्य कृपया ॥ ४॥

परत्वाद्यैरित्थं परिचरणसक्तो गुणगणैः
प्रभुं सेवायोग्यं प्रथमशतके वीक्ष्य वरदम् ।
तमेव स्वात्यर्थप्रियमथ च भोक्तुं व्यवसितौ
वरेष्कवं तस्य प्रथमवरणीयं प्रथयति ॥ ५॥

छितीयेऽतिक्लेशक्षणविरहमुत्तुङ्गललित
भिलत्सर्वारूपादं व्यसनशमनं स्वाप्तिमुदितम् ।
स्ववैमुख्यत्रस्तं स्वजनसुहृदं मुक्तिरसदं
स्वकैकृनर्योद्देश्यं सुभगसविधस्थं निरनिशत् ॥ ६॥

उपायत्वैकान्तं प्रथममिह सेव्यत्वमुदितं

ततश्च प्राप्यत्वौपयिकमतिभोग्यत्वमवदत् ।
द्वयं तत्स्वासाधारणतनुविशित्रस्य गणयन्
तृतीये विश्वेशं शुभसुभगरूपं कथयति ॥ ७॥

अनीदृक्यौन्दर्यं तनुविहितसर्शादिसुभं
स्वसेवार्थाकारं प्रगुणवपुषं मोहनतनुम् ।
अपश्यल्लभ्यार्चाविभवमतिदास्यावल्कं
सदा दृश्यं स्तुत्याकृ।तेअधविरुद्धाकृतिशिह ॥ ८॥

श्रिया कान्तोऽनन्तः शुमलनुविशिष्टः फलमसौ
फलावाप्तहेतुः स्वयप्रिति च निर्धार्य शतकैः ।
इदानीं घुद्धिस्थक्रमत इह युक्ढ्रया मुनिवरः
फलत्वं तस्यैव द्रढयति तदन्येषु विमुखः ॥ ९॥

स्तियैफुवयं तुर्ये रञ्हजवहभोभ्य निरविशत्
मिथस्श्लिञ्छं क्लेशावहसहिनुतुव्य निजजनम् ।
कृतार्थीकुर्वन्तं प्रणयिभिषजं सद्वदकगुण
ख्यहेयस्वोपेक्ष्य स्वमतफलमुञ्चैस्यववगतम् ॥ १०॥

उपायत्वं यत्तत् प्रथमशतकेऽभाव्यत विभोः
अनन्योपायस्तत् द्रढयति परं पञ्चमनुखैः ।
निरीहस्तत्रादौ निरचधिकनिर्हेतुकदया-
सरिरस्रोतः पद्मं शरणयति नायदन्य चरणम् ॥ ११॥

दयानिघ्न भक्तैरघविमथनं प्रेमजनकं
जगद्रक्षादीक्षं स्मृतिसुप्रमहम्भावविश्वम् ।
शरण्यं दीनानां स्वररवकृतदास्याभ्युपगमं
प्रचख्यौ तं प्राप्तं प्रशकनकृतं पञ्चमशने ॥ १२॥

अन्नाद्यन्तानन्दस्वरसकरुणाकन्दजलितः
प्रणेतुर्व्यापारः प्रपदनविपाकार्ह उदितः ।
तमाचार्योपक्षं चिरविरश्मिख्यात्मघटन-
स्फुरच्छक्तिं षष्ठे मुनिरशरणो याति शरणम् ॥ १३॥

गुरुद्वारोपेयं स्वयमभिमतं वौरेघटकं
चरित्रैः कर्षन्तं परविघटनं स्वान्वितहरम् ।
निदानं धृत्यादेर्धटकवशभूतिद्धयमगात्
अनर्हद्वैघटथं त्वविकलशरण्यस्थितिमिह ॥ १४॥

तदेवं षष्ठान्तं विक्तिसविशेअग्रपहानः
म्लालाभात् खिन्नस्त्वरितहृदयः सप्तमशते ।
अनिष्टोपन्यासप्रभृतिभिरनिष्टप्रशमने
स्वतःसिध्यच्छलि प्रभुमभिमुखं संमुखयति ॥ १५॥

सहन् शाट्याशङ्कनं उपशमितगर्हः प्रकटयन्
स्वगोवृणत्वं गुप्तिक्रममखिलजन्तुप्रणयिताम् ।
श्रिताक्रन्दच्छेत्ता स्मरणविशदश्चित्रविभवः
स्तुतौ युञ्जन् स्तोतृमुयसनजिददर्शि प्रभुवरः ॥ १६॥

अथानिष्टान् ख्या स्वयमुपजिहीर्षन्नपि विभुः
तदिच्छां बाह्येषु प्रशमयितुकामः क्रमवशात् ।
निजेच्छार्संसिद्धत्रिविधचिदचिक्कतविततिः
श्रितेच्छावैचित्रीवशा इति वदत्यक्ष्मशते ॥ १७॥

दिदृक्षायां दृश्यः प्रभुरगणि निस्सङ्गसुलभः
स्वाष्टृश्लेषे कान्तः श्रितविहितपौष्कल्यविभवः ।
अपेक्षासापेक्षः स्ववितरणसज्जो हृदि रतः
स्वदास्यं तन्निष्ठा तदवधिमपीह प्रकटयन् ॥ १८॥

अभीष्टं विश्वस्मिन् विषमफलकाङ्घिण्यविषमं
प्रयच्छन्तं दृष्ट्वा परमपुरुषायैकरसिकः ।
निरस्तान्यापेक्षो निखिलजगदीशस्य नवमे
निदानं सिद्धीनां निरुपधिकसुहृत्त्वं गणयति ॥ १९॥

अभाव्येको बन्धुश्चिरकृतदयः शीलजलधिः
स्वसबन्धात् गोप्ता स्वगुणगरिमस्मारणपरः ।
अशक्यो विस्मर्तुं घटकमुखीवस्नभविषयः
सुमज्जनिः सिद्ध्यनुछसमय इच्छन्नवसरम् ॥ २०॥

उदन्तैरित्येवं निरुपधिकसौहार्दपिशुनैः
उदन्यामुस्तोमुपजनितवन्तं निजपदे ।
विवर्गाप्तिक्रान्तस्थिरजगरघशवपथगतेः
सहायीकुर्वाणश्चरमशतके विन्दनि मुनिः ॥ २१॥

गतिं व्यध्वक्लेशच्छिदमपदशङ्कास्पदरसं
भजद्भिः सुप्रापं विविधभजनप्रम्लिमिह ।

फले तीव्रोद्योगं स्वविक्यकृतात्यादरमगात्
यदृच्छातुष्टं सत्सराशामपुनर्जन्मसयुजम् ॥ २२॥

परं प्राप्यं पश्यन् परिचरणहेतुं विगणयन्
परिष्कुर्वन्नाज्ञामनितरशरण्यः शरणयन् ।
अनिष्टप्रध्वंसप्रभृतिषु निदानं च कथयन्
मुहुर्देवं लक्ष्म्या सहितमिह भेजे मुनिवरः ॥ २३॥

पुरा शोकः श्लोकोऽभवदिति नयादित्यपनिप-
न्मुनेः पुण्यश्लोकादजनि परभक्तेः परिणतिः ।
व्यपोह्य स्वं भावं हरिचरणसन्तानकलिकाम्
अविक्षद्योगी यस्तनुमतनुकारुण्यविवशः ॥ २४॥

सतामित्थं सारं द्रमिडनिगमस्यान्वकथयत्
बहूनां विद्यानां बहुभतिपद वेङ्कटपतिः ।
दिशासौधश्रेणीदृढघटितजैत्रध्वजपटी-
परामर्शभ्रश्यद्व्यतिमतनिराबाधनिगमः ॥ २५॥

मनुप्रआसप्राचेतधृवपरिषदर्हा क्वचिदियं
सुभवासिक्ता सूक्तिः स्वयमुदयमन्विच्छति जने ।
निरुव्यडयुः के विन्ध्याचलविकटसन्ध्यानटज्झा-
परिभ्रान्ता पङ्गोरुपरि यदि गङ्गा निपतति ॥ २६॥

इति

श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु
द्रमिडोपनिषत्सारः समाप्तः ।